संहृतपादः पारावतचरणपाटलरागो रविरम्बरतलादलम्बत्। विहाय धरणितलमुन्मुच्य कमलिनीवनानि शकुनय इव दिवसावसाने तपोवनतरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत।'—'इसी समय दिन ढल चला। मुनियों ने स्नान के बाद अर्घ्य देते समय जो चन्दनराग पृथ्वी पर अर्पित किया था, मानों उसी रक्त चन्दन को आकाश में स्थित सूर्य ने अपने अङ्गों में धारण कर लिया है। ऊपर की ओर मुख उठाकर सूर्य-मण्डल पर दृष्टि डाले, सूर्य-किरणों का पान करने वाले तपस्वियों द्वारा मानों चारों तरफ फैला हुआ प्रकाश पाया जा रहा है, तभी तो दिन क्षीणता को प्राप्त हो रहा है। कपोत के चरणों के समान लाल-लाल सूर्य आकाश के छोर पर पहुँच कर अपने पाद ( किरण ) इसलिये समेट रहा है कि कहीं वे इस उगते हुये सप्तर्षि-मण्डल से छू न जायँ। दिन डूबने की इस घड़ी में सूर्य-रश्मियाँ पृथ्वी-तल को छोड़ आश्रम के वृक्षों तथा पर्वतों के शिखरों पर पक्षियों की भाँति बसेरा ले रही हैं।' बाण मानवीय मनोभावों का प्रकृति के दृश्यों पर आरोप करने में कुशल हैं। सूर्य के विदेश-गमन पर उसकी प्रियतमा कमलिनी शीघ्र पति-समागम की इच्छा से तपस्विनी का व्रत धारण करती है—कमल का मुकुल उसका कमण्डलु है, श्वेत हंस उसका उत्तरीय है, कमल की नाल उसका शुभ्र यज्ञोपवीत है तथा भ्रमरों की पंक्ति उसकी रुद्राक्ष माला है।

बाण की वर्णन-शक्ति अद्भुत है। 'कादम्बरी' के वर्णनात्मक स्थलों में वे कई प्रकार की शैलियों का प्रयोग करते हैं। कहीं वाक्यावली संक्षिप्त कर भावों का द्रुतवेग से उन्मेष करना आवश्यक प्रतीत होता है तो कहीं भाषा का प्रलोभन संवरण भी दुस्साध्य हो जाता है। जहाँ विषय भाव-प्रधान, मार्मिक अथवा गम्भीर होता है, वहाँ उनकी शैली बड़ी ही सशक्त और प्रभावोत्पादक होती है। वाक्य छोटे-छोटे होते हैं, दीर्घसमासों का अभाव होता है और विशेषणपद न्यून होते हैं। एक उदाहरण देखिए। कपिञ्जल मदन-व्यथा से पीड़ित पुण्डरीक की भर्त्सना कर रहा है—'सखे

पुण्डरीक नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः धैर्यधना हि साधवः। किं यः कश्चित्प्राकृत इव विक्लवी-भवन्तमात्मानं न रुणत्सि। कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवं कृतः। क्व ते तद्धैर्यं, क्वासाविन्द्रियजयः।········निरुपकारो गुरूपदेशविवेकः। निष्प्रयोजना प्रबुद्धता निष्कारणं ज्ञानम्। यदत्र भवादृशा अपि रागाभिषंगैः कलुषीक्रियन्ते प्रमादैश्चाभिभूयन्ते।' कैसी शक्तिशाली भाषा है! अन्यत्र, उपदेश देते समय अथवा शिष्टाचार दिखाते समय बड़ी सरल शैली प्रयुक्त हुई है। शुकनास चन्द्रापीड को लक्ष्मी के दोष समझा रहे हैं—'न ह्येवंविधम-परमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या। लब्धाऽपि खलु दुःखेन पाल्यते। दृढ़गुणपाशसंदाननिष्पन्दीकृतापिनश्यति न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शील पश्यति। न वेदग्ध्य गणयति।······न लक्षणं प्रमाणी करोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति।' किन्तु राजवैभव, रमणीविलास अथवा प्राकृतिक भव्यता के चित्रण में उनकी शैली अलंकृत, अपेक्षाकृत क्लिष्ट एवं प्रगाढ़ हो जाती है। दीर्घकाय समास, विपुल वाक्य, विशिष्ठ एवं श्लिष्ट पदावली तथा चित्र-काव्य के सभी साधनों का प्रचुर प्रयोग देख पड़ता है: 'कल्लोलमुखर समुद्र की लहर की भाँति जहाँ तक सम्भव है, भाषा उद्वेलित हो उठी है—सीमा पार कर गई है, अकृपण कविप्रतिभा ने कल्पना की यथेष्ट वृष्टि की है।' शूद्रक, जाबालि आश्रम विन्ध्याटवी, महाश्वेता तथा कादम्बरी के वर्णन ऐसी शैली के उपयुक्त उदाहरण हैं। ऐसे स्थलों पर भी बाण बीच-बीच में छोटे-छोटे वाक्य बैठा देते हैं, जिससे वर्णन-विस्तार आयासजनक न हो जाय। प्रायः यह भी देखा जाता है कि इस प्रकार के क्लिष्ट स्थलों के बाद तुरन्त ही सरल और प्राकृतिक शैली के दर्शन होते हैं।

बाण की शैली में सूक्ष्म निरीक्षण-शक्ति, अलंकृत वर्णनप्रणाली, प्रकृष्ट प्रकृति-प्रेम, उर्वर कल्पनाः अजस्र शब्दराशि तथा मौलिक अर्थों की उद्भावना—ये सभी गुण सर्वत्र समान रूप से पाये जाते

हैं। इसका आशय यह नहीं कि उनकी शैली सर्वथा दोष रहित है। उनके वर्णन प्रायः बहुत लम्बे हो जाते हैं। किसी प्रस्तुत प्रसंग को वे तब तक नहीं छोड़ते जब तक वह पूर्णतया आलोडित न हो जाय। कोई पर्यायवाची विशेषण बाकी नहीं बचता; कोई श्लिष्ट या लाक्षणिक प्रयोग रह नहीं जाता। उनकी कल्पना सदा मुक्तहस्त रही है अस्थान और अपात्र में भी उसने अपनी सम्पत्ति की अजस्र वर्षा की है। पाश्चात्य आलोचक उनमें गद्य की एक ऐसे भीषण अरण्य से उपमा देते हैं, जहाँ क्लिष्ट एवं दुरूह शब्दों के झाड़ खड़े हैं, सूक्ष्म पौराणिक संकेतों की कन्दरायें हैं और विपुलकाय विकट समासों के रूप में व्याघ्र विचरण कर रहे हैं। बाण कथानक में यथास्थान विस्तार और शंकोच नहीं करते। कथा के बीच अवान्तर वर्णनों के बाहुल्य से कथानक की प्रगति कुण्ठित हो जाती है। उज्जयिनी, शुकनास-प्रासाद: चण्डिका-मन्दिर; चन्द्रोदय आदि के वर्णन कवित्व की दृष्टि से उच्च कोटि के हैं, किन्तु विशेष विस्तृत और अतिरंजित होने के कारण कथानक के प्रवाह को शिथिल कर देते हैं।

वस्तुतः बाण के गद्य-काव्यों का यथार्थ महत्व उनके कथानक चरित्र-चित्रण अथवा वस्तु-विन्यास में नहीं,, वरन् उनके कवित्व एवं रसमय प्रवाह में है। 'संस्कृत भाषा का उन्होंने अनुचरों से घिरे सम्राट् की भाँति प्रस्थान कराया है और कथा को पीछे-पीछे प्रच्छन्न भाव से छत्रधर की भाँति छोड़ दिया है।' उनके भाषा-कौशल और कल्पना-वैचित्र्य से ही उनकी कृतियाँ इतनी आकर्षक और लोकप्रिय हुई हैं। अपनी इस असाधारण शैली द्वारा ही वे बृहत्कथा के सीधे साधे कथानक को साहित्यिक सौन्दर्य प्रदान कर सके। उनका गद्य व्यावहारिक कार्यों के लिये भले ही अनुपयुक्त हो; किन्तु 'कादम्बरी' के समान उत्कृष्ट गद्य-काव्य के लिये सर्वथा उपयुक्त है। उनके वाक्य विपुलकाय होते हुए भी अस्पष्ट नहीं। समासों और विशेषण-पदों का आधिक्य होते हुए भी वे विशद और परिष्कृत हैं। उनके पौराणिक संकेत हम

भारतीयों के लिये कदापि क्लिष्ट नहीं है। उनके शब्द-चित्रों में विविधता तथा प्रभविष्णुता है। उनका शब्द-भंडार अक्षय है। उनका वाक्यप्रबन्ध चारु एवं स्निग्ध है। औचित्य का वे कभी अतिक्रमण नहीं करते। उनके संवाद अत्यन्त स्वाभाविक एवं प्रभावशाली होते हैं। उनकी कल्पना अजस्र और उत्तरोत्तर विकासशील होती है। महाश्वेता के निम्नलिखित वर्णन में उनकी कल्पना-विभूति का कैसा प्रसार है—'शुक्लपक्षपरम्परामिव पुंजीकृतां, शङ्खादिवोत्कीर्णां, मृणालैरिव विरचितावयवां, दन्ततलैरिव घटितां, इन्दुकरकूर्चकैरिव प्रक्षालितां अमृतफेनपिण्डैरिव पाण्डुरीकृताम्।'

आधुनिक आलोचना के सिद्धान्तों की कसौटी पर बाण की शैली की समीक्षा करना अनुचित होगा। कोई भी लेखक अपने समय में प्रचलित आदर्शों और रूढ़ियों से प्रभावित हुए बिना नहीं रहता। बाण की आलोचना करते समय भी हमें यही दृष्टिकोण सम्मुख रखना चाहिये। अलंकृत गद्य-शैली ही उनके समय में समादृत थी। उस समय समास-बाहुल्य तो गद्य का प्राण ही समझा जाता था—'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्।'[1] प्रत्येक कला कुछ प्रचलित रूढ़ियों के द्वारा ही अपने आदर्श पर पहुँच सकती है। समास बहुलता एक ऐसी ही रूढ़ि थी। यदि हम इस रूढ़ि के पार देखेंगे तो हमें स्वीकार करना होगा कि बाण उच्चकोटि के गद्य-कवि थे। कथाकार की कला में, मानव-हृदय के सुकुमार भावों की अभिव्यक्ति में, उन्नत चरित्रों की सृष्टि में, उदात्त जीवन एवं सौजन्यपूर्ण व्यवहार के चित्रण में तथा शिष्ट संवादों के निरूपण में बाण भारतीय साहित्य में अनुपमेय हैं और विश्व-साहित्य में उच्चस्थान पाने योग्य हैं।

आधुनिक पाश्चात्य विद्वानों को बाण की शैली के सौन्दर्य को हृदयंगम करने में भले ही कठिनाई होती हो, किन्तु जिस भाषा में

---

१—काव्यादर्श १।८०

बाण ने अपनी कृतियों की रचना की है, उसके पण्डितों ने उनकी शैली की मुक्तकण्ठ से प्रशंसा की है। 'विदग्धमुख मण्डन' के रचयिता धर्मदास किस विलक्षण ढङ्ग से बाण की प्रशंसा करते हैं—

रुचिरश्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य॥

'रुचिर स्वर, वर्ण तथा पदों से विभूषित, रस और भावों से अलंकृत वह संसार के चित्त को आकृष्ट कर रही है।' 'क्या तुम किसी तरुणी की बात कर रहे हो ?' 'नहीं, नहीं, मैं तो बाण की सरस मधुर वाणी के सम्बन्ध में कह रहा हूँ।' त्रिलोचन के अनुसार बाण की कविता के समान अन्य कवियों की रचना केवल चपलता है—

हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत्कविकुरंगाणां चापलं तत्र कारणम्॥

'पारवतीपरिणय' में नृत्यति यद्रसनायां वेधोन्मुखलासिका वाणी' इस प्रकार बाण के विषय में ठीक ही कहा गया है। बाण की सर्वव्यापिनी प्रतिभा को लक्ष्य में रख कर ही 'बाणोच्छिष्ट जगत्सर्वम्' कहा जाता है। गोवर्धनाचार्य का कहना है कि जिस प्रकार पूर्व समय में अधिक प्रगल्भता प्राप्त करने के लिए शिखण्डिनी शिखण्डी बन गई थी, उसी प्रकार पुरुष रूप में अधिक चमत्कार पाने की अभिलाषा से वाणी ( सरस्वती ) ने बाण का अवतार लिया—

जाता शिखण्डिनी प्राक् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव ह॥

प्रसन्नराघव के कर्ता जयदेव ने बाण को, कविता-कामिनी के हृदय-मन्दिर में निवास करने वाला साक्षात् कामदेव ही बता दिया है— 'हृदयवसतिः पंचबाणस्तु बाणः।' त्रिविक्रमभट्ट ने अपने 'नलचम्पू' में बाण की लोकप्रियता की इस प्रकार प्रशंसा की है—

शश्वद्बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रंजितो जनः ॥ १।१४

गङ्गादेवी के अनुसार बाण की भारती वीणा की सुमधुर तान को हरने वाली है—

वाणीपाणिपरामृष्ट वीणानिक्काणहारिणीम्।
भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम् ॥

श्री चन्द्रदेव कहते हैं कि कुछ लोग श्लेप में, कुछ शब्दों के उपयुक्त गुम्फन में, कुछ रसाभिव्यक्ति में, कुछ अलंकार, अर्थ-व्यक्ति अथवा कथा-वर्णन में कुशल होते हैं, किन्तु बाण तो कविता की विन्ध्याटवी में कवि-कुंजरों के गण्डस्थल को विदीर्ण करने वाले सिंह हैं—

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-
लंकारे कतिचित्सदर्थविषये चान्ये कथावर्णने
आ सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
संचारी कविकुम्भकुम्भिभिदुरो वाणस्तु पंचाननः ॥

बाणभट्ट के पश्चात् भी गद्यकाव्य लिखे जाते रहे। उनमें प्रायः बाण की कृतियों का ही अनुकरण है। धनपाल (१००० ई०) की तिलकमंजरी पर 'कादम्बरी' का प्रभाव स्पष्ट है। पर तिलक मंजरी की विशेषता यह है कि उसमें चित्रकला, प्रस्तरकला तथा अन्य कला-कौशलों का स्थल-स्थल पर विशद उल्लेख हुआ है। तत्कालीन भारत में विविध कलाओं के अनुशीलन का यथातथ्य चित्रण तिलकमंजरी में उपलब्ध होता है[१]। वादीभसिंह (१००० ई०) की गद्यचिन्तामणि का कथानक 'कादम्बरी' के समान ही है। रीति और भाषा-भंगिमा में भी बाण का अनुकरण देख पड़ता है। वामनभट्ट बाण (१५०० ई०) का

१—'Art notes from Dhanapala's Tilakamanjari, *Inaian Culture* Cet. 1935 pp. 199-210.

वेमभूपालचरित हर्षचरित की प्रतिकृति मात्र है। बाद के गद्य-काव्य साहित्य के इतिहास की दृष्टि से महत्त्व की नहीं। पर दो-एक आधुनिक गद्य-काव्यों का उल्लेख करना आवश्यक है। साहित्याचार पं० अम्बिका-दत्त व्यास ने शिवराजविजय नामक गद्य-काव्य की रचना की है, जो काशी से १९०१ ई० में प्रकाशित हुआ है। व्यास जी का स्थितिकाल १८५८-१९०० ई० था। इनके पूर्वज जयपुर राज्य के निवासी थे, पर इनके पितामह काशी में आकर बस गये थे। वहीं उनका अध्ययन संपन्न हुआ। 'विहारी-विहार' में उन्होंने 'संक्षिप्त निज वृत्तान्त' स्वयं लिखा है। मृत्यु के समय वे गवर्मेण्ट संस्कृत कालेज पटना में प्रोफेसर थे। बिहार में 'संस्कृत संजीवनी समाज' स्थापित कर उन्होंने संस्कृत शिक्षा-प्रणाली का सुधार किया। व्यास जी ने छोटी-बड़ी मिला-कर संस्कृत और हिन्दी में कुल ७८ पुस्तकें लिखी हैं।

शिवराजविजय छत्रपति शिवाजी के जीवन को चित्रित करने वाला रोचक उपन्यास है। ऐतिहासिक घटनाओं पर कल्पना का रंग चढ़ा कर लेखक ने सारी कृति को अतीव हृदयग्राही बना दिया है। विशद वर्णनाशक्ति स्थल-स्थल पर प्रस्फुटित हुई है। कहीं रोचक एवं स्वाभा-विक संवाद हैं, कहीं विनोद और हास्य का पुट है, कहीं प्रणय का विमुग्धकारी चित्रण है, कहीं विषम गिर-दुर्गों पर आक्रमण का वर्णन है, कहीं महाराष्ट्र शिविर, तो कहीं मुगल-दरबार का दृश्य है। रोचकता की दृष्टि से शिविराजविजय आधुनिक उपन्यासों से किसी मात्रा में घटकर नहीं है। उसमें विशदवर्णन के साथ ही घटनाओं की तीव्र गतिशीलता भी है। उनकी शैली में प्रासादिकता, और प्रवाह के साथ परिष्कृत प्रौढ़ता भी है। उसमें दण्डी और बाण की शैलियों की सफल अनुकृति भी देख पड़ती है। स्थल-स्थल पर ऐसे शब्दों का भी प्रयोग हुआ है जो अभी तक कोष में ही पड़े थे, जैसे 'चिह्नम्', 'सरकः', 'चिरंटी', 'कवरी' आदि। शिवराजविजय की शैली का एक उदाहरण देखिये। शिवा जी दिल्ली में प्रवेश कर रहे हैं—"तावत्तं सेतुमुल्लंघ्य परं तट-

माथाता दिल्लीं प्रविविशु : तत्र च प्रधाणस्थैः परिवर्तितग्रीवैर्लोलोष्णीष-बन्धैर्भटैः, आपणोपविष्टैः स्तब्धशंकुज्ञैः स्वर्णकारैः, कर्णार्पितलेखनीकैश्चित्रकारैः, समुपेक्षिततुलादण्डवाणिजैः, विशिथिलस्खलितमानदण्डः पटविक्रयिभिः, रुद्धसीवनैः स्यूतिकारैः, विस्मृतहारग्रन्थनैर्मालाकारैः घंटापथे विचिरद्भिः समाकृष्टवल्गैः सादिभिः, आसादितप्रान्तैः पर्य्यटकैः, आसीर्वचन-स्फुरितोष्ठैरिव ब्राह्मणैः, परिवर्जितक्रीडैर्बालकैः, गवाक्षस्थैः शिथिलितव्रीडैरंगुल्यग्रापसारिततिरस्कारिणीविच्छेदप्रहितकटाक्षावलोकनैः कुलयुवतिजनैश्च सकौतुकं निरीक्ष्यमाणः, कोऽयं, कुतोऽयं, सोऽयं, स एवायं, वीरोऽयं, वीरवरोऽयं, महाराष्ट्रराजोऽयं, दुर्धर्षोऽयं, चिरश्रुतोऽयं शास्तिखानशास्तिशास्त्रज्ञोऽयं, विजयपुरविजयदीक्षितोऽयं गोलखण्ड-खण्डखण्डनपण्डितोऽयं, अम्बरपुरन्दरप्रीतिपरवशोऽयं, सम्राजमुपसर्पति । अम्बराजकुमारेण सह नीयते।'' व्यासजी निःसंकोच 'अभिनव-बाण' कहे जा सकते हैं।

प्राचीन संस्कृत साहित्य में निबन्ध-लेखन का प्रचार नहीं था। आधुनिक समय में ओरिएण्टल कालेज लाहौर के पण्डित हृषीकेश शास्त्री भट्टाचार्य (१८५० - १९१३ ई०) ने सामयिक विषयों पर सुरुचिपूर्ण निबन्ध लिखकर मौलिक प्रणाली का प्रचार किया है। उन्होंने 'विद्योदय' नामक संस्कृत पत्रिका का ४४ साल तक संपादन किया। 'विद्योदय' में शास्त्रीजी के सामयिक समस्याओं पर सरस और विनोदपूर्ण शैली में लेख रहते थे। विद्वानों ने उनके विषयों की नवीनता तथा विविधता की प्रशंसा की है। मैक्समूलर ने भी शास्त्री जी के अद्भुत कार्य को पसन्द किया था। १९वीं शताब्दी में एक संस्कृत पत्रिका का नूतन विचार प्रणाली से तथा पाश्चात्य विचार-शैली में सम्पादन कर शास्त्री जी ने इस युग में संस्कृत साहित्य की अमूल्य सेवा की है तथा अपने प्रबन्धों से उसकी श्रीवृद्धि की है। उनके लेखों का एक संग्रह प्रबन्ध मञ्जरी १९३० ई० में प्रकाशित हुआ है। यह 'सकलरस [illegible] प्रबन्धानां संग्रहः' है।

इसमें एक लेख 'उद्भिज्ज-परिषद्' है, जिसमें पेड़-पौधों की सभा में मनुष्यों के सम्बन्ध में बड़ी रोचक चर्चा होती है—'अश्वत्थमहोदयः स्वशाखाहस्तमुत्थाप्य प्रतिपादयति—भो भो नानादिग्देशसमागताः सुभद्रा वनस्पतयः, परमप्रियतमा लतावध्वश्च, सावहिताः शृण्वन्तु भवन्तः। अद्य मानवा एवास्मत् समालोच्यविषयः।...मानवा नाम सर्वासु सृष्टिधारासु निकृष्टतमा सृष्टिः। समन्तादभिनवोत्तरविलक्षण-सृष्टिमुत्पादयता भगवता जगत्सचित्रा यादृग् बुद्धिप्रकर्षः सृष्टिनैपुण्यञ्च प्रदर्शितं, मानवसर्गं विदधता पुनर्नेन तत्सर्वमेकपद एवापहारितम्, एतावदुच्चावचसृष्टिपरम्परामवलोक्य स्रष्टुरगाधबुद्धिमत्वं सृष्टिश्चेयं बुद्धि-पूर्विकेति यदस्माभिरनुमितमासीत् पूर्वं, साम्प्रतं मानवसर्गसन्दर्शनेन तु निःशेषतोऽपागतोऽसौ संस्कारः, संजातश्च तद्विपरीतः 'स्रष्टुर्न स्वल्पापि बुद्धिर्विद्यत' इत्येवंरूपः कोऽपि निश्चयः।'

प्रबन्ध मञ्जरी की भाषा अत्यन्त प्रांजल एवं प्रवाहपूर्ण है। संस्कृत में व्यङ्ग-शैली ( Catire ) का प्रथम प्रादुर्भाव इन्हीं निबन्धों से माना जायगा। भट्टाचार्य की भाषा में भी बाण की शैली की पूरी छाप है। इनके विषय में म० म० पं० गिरिधर शर्मा कहते हैं—

मुद्रयति वदनविवरं मृतभाषावादिना मुहेराणाम्।
स्मरयति च भट्टबाणं भट्टाचार्यस्य सा वाणी॥

## संस्कृत गद्य-काव्य की विशेषताएँ

संस्कृत गद्य-काव्य के कथानक का मूल प्रायः लोक-कथाओं ( folk-tale ) से लिया गया है। लोक-कथाओं की भाँति कथा में उपकथा का संनिवेश करने की प्रथा भी गद्य-काव्यों में देख पड़ती है। किन्तु गद्य-काव्यों की व्यञ्जना-प्रणाली लोक-कथाओं से भिन्न है। उनकी शैली बहुत कुछ पद्य-काव्यों से प्रभावित हुई है। शिष्ट एवं संभ्रान्त वर्ग के लिये लिखे जाने के कारण इन गद्य-काव्यों में उत्कृष्ट

एवं अलंकृत भाषा का प्रयोग तो हुआ ही है, साथ ही वर्णन-शैली का भी अत्यधिक परिष्कार हुआ है। दीर्घकाय समास, अनुप्रास, श्लेष, यमक, परिसंख्या आदि अलंकारों तथा सूक्ष्म पौराणिक संकेतों का प्रचुरता से प्रयोग किया गया है। प्रकृति का विस्तृत चित्रण तथा नायक-नायिका की शारीरिक और मानसिक दशाओं का अतिरंजित वर्णन भी हुआ है। शृङ्गार-रस ही इनका प्रधान रस है। लोककथाओं के सरल और प्रवाहयुक्त आख्यानों पर कल्पना और पाण्डित्य का गहरा रंग चढ़ाया गया है। कथा-भाग गौण हो गया है और अलंकृत वर्णन-शैली ही प्रधान हो गई है। पद्य काव्यों के व्यापक प्रभाव के कारण संस्कृत में व्यावहारिक गद्यशैली का विकास बहुत कम देख पड़ता है।

संस्कृत के गद्य-काव्य इस धारणा के पोषक है कि कविता के लिये छन्द अनिवार्य नहीं हैं; छन्दोबद्धता तो उसका केवल एक बाह्य परिच्छेद है। गद्य और पद्य दोनों में समान रूप से कविता की रचना हो सकती है। यही कारण है कि संस्कृत गद्य-काव्य सहृदयों के हृदय में वास्तविक काव्यानन्द का संचार करते हैं। यदि भाषा सौष्ठव, वर्णन नैपुण्य, कल्पना-वैचित्र्य, रसास्वाद, पद-लालित्य, श्लेष चातुर्य और अलंकार वैभव—इन समस्त काव्यात्मक गुणों का एकत्र अवलोकन करना हो तो संस्कृत के गद्य-काव्यों का अनुशीलन करना चाहिये। ऐसी अलंकृत, उदात्त, एवं परिष्कृत गद्य-शैली का विकास स्यात् ही किसी भाषा के साहित्य में हुआ हो।

———

आदौ दण्डी ततश्चासीत् सुबन्धुः श्लेषमार्मिकः।
तथा श्रीबाणभट्टश्च त्रयो गद्ये प्रकीर्तिताः ॥

# संस्कृतगद्यमञ्जरी

—:❀:—

## १—आचार्यानुशासनम्

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। ये केचनास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनः, युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम् एवमु चैतदुपास्यम्।

—तैत्तिरीयोपनिषद् I. 11

# २—जगतः कारणं ब्रह्म

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते कस्मादुपसंहारदर्शनात्। इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तस्तत्तत्कार्यं कुर्वाणा दृश्यन्ते। ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत। तस्मान्न ब्रह्म जगत्कारणमिति चेन्नैष दोषः। यतः क्षीरवद् द्रव्यस्वभावविशेषादुपपद्यते। यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति। ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनं औष्ण्यादिकं कथमुच्यते क्षीरवद्धीति। नैष दोषः स्वयमपि हि क्षीर यां च यावतीं च परिणाममात्रामनुभवत्येव, त्वार्यते त्वौष्ण्यादिना दधिभावाय। यदि च स्वयं दधिभावशीलता न स्यान्नैवोष्ण्यादिनापि बलाद् दधिभावमापद्येत। न हि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते। साधनसंपत्त्या च तस्य पूर्णता संपद्यते। परिपूर्णशक्तिकं तु ब्रह्म, न तस्यान्येन केनचित् पूर्णता संपादयितव्या। तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादिवद् विचित्रपरिणाम उपपद्यते।

—शाङ्करभाष्य on ब्रह्मसूत्र II. 1. 2.

———

# ३—गृहिणः प्रियहिताय दारगुणाः

अस्ति द्रविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिताता-मापेदे—'नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद्विन्देयं कलत्रम्' इति। अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकीं संपत्तिमनभिसमीक्ष्य कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम। 'लक्षणज्ञोऽयम्' इत्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयांबभूवुः। यां कांचिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे, शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्' इति। स हसितावधूतो गृहाद् गृहं प्रविश्याभ्रमत्।

एकदा तु शिबिषु कावेरीतीरपत्तने सह पितृभ्यामवसित-महर्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां कांचन विरल-भूषणां कुमारीं ददर्श। अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकायाः सर्व एवावयवा नातिस्थूला नातिकृशा नाति-ह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च। रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ, समगुल्फ-सन्धी मांसलावशिरालौ चाङ्घ्री, तनुतरमीषन्निम्नं गम्भीरं नाभिमण्डलं, वलित्रयेण चालंकृतमुदरम्, धनधान्यपुत्रभूयस्त्व-चिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्व-वृत्तताम्राङ्गुली संनतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसंधी च बाहुलते, तन्वी कम्बुवृत्तवन्धुरा च कन्धरा, वृत्तमध्यविभक्त-

रागाधरम् असंक्षिप्तचारुचिबुकम् आपूर्णकठिनगण्डमण्डलम् असंगतानुवक्रनीलस्निग्धभ्रूलतम् अनतिप्रौढतिलकुसुमसदृश नासिकम् असितधवलरक्तत्रिभागभासुरमधुराधीरसंचारमन्थरायतेक्षणम इन्दुशकलसुन्दरललाटम् इन्द्रनीलशिलाकाररम्यालकपंक्ति द्विगुणकुण्डलितम्लाननालीकनाललुलितलम्बश्रवणपाशयुगुलमाननकमलम्, अनितभंगुरो बहुलः पर्यन्तेऽप्यकपिलरुचिरायामवानेकैकनिसर्गसमस्निग्धनीलो गन्धग्राही च मूर्धज कलापः। सेयमाकृतिर्न व्यभिचरति शीलम्। आसज्जति च मे हृदयमस्यामेव। तत्परीक्ष्यैनामुद्वहेयम्। अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः' इति स्निग्धदृष्टिराचष्ट— 'भद्रे कच्चिदस्ति कौशलं शालिप्रस्थेनानेन संपन्नमाहारमस्मानभ्यवहारयितुम्' इति।

ततस्तया वृद्धादासी साकूतमालोकिता। तस्य हस्तात्प्रस्थमात्रं धान्यमादाय कश्चिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत्। सा कन्या तान् गन्धशालीन्संक्षुद्य मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदु मृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान्पृथक्चकार। जगाद च धात्रीम्—'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः। तेभ्य इमान्दत्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहर' इति। तथाकृते तया तांस्तण्डुलानतिनिम्नोच्चातविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन

समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितोत्क्षेपणावक्षेपणायासितभुजमसकृदङ्गुलिभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकांस्तण्डुलान् सकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत्। दर्व्या चवाघट्ट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत्। इन्धनान्यन्तःसाराण्यम्भसा समभ्युदय प्रशमिताग्नीन् कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्—'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानय' इति। तथानुष्ठिते च तया द्वित्रानुपदशानुपपाद्य तदन्नमण्डमार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसंभारं दत्ताङ्गारधूपवास च संपाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि शरावद्वयं दत्तमार्द्रमभिमृशन्नतिष्ठत्। सा तु तां पेयामेवाग्रे समुपाहरत पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत्। ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार। इमं च दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां

शेषमन्नमभोजयत्। सशेष एवान्धस्यसावतृप्यत्। अयाचत पानीयम्। अथ नवभृङ्गारसंभृतमगुरुधूपधूपितमभिनवपाटला- कुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयांचभूव। सोऽपि मुखोपहितशरावेण हिमशिशिरकण- करालितारुणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः स्पर्श- सुखोद्भिन्नरोमांचकर्कशकपोलः परिमलप्रवालोत्पीडफुल्लघ्राणरन्ध्रः माधुर्यप्रकर्षावर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ। शिरःकम्पसंज्ञावारिता च पुनरपकरकेणाचमनमदत्त कन्या। वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवो- त्तरीयकर्पटं व्यवधाय क्षणमशेत। परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये। नीत्वैतदनपेक्षः कामपि गणिकामवरोधमकरोत्। तामप्यसौ प्रियसखीमिवोपाचरत्। पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत्। गृहकार्याणि चाहीनमन्वतिष्ठत्। परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत्। तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेवकृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश। तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति।

—दशकुमारचरितम् V.

---

## ४—वर्षावर्णनम्

एकदा तु कतिपयमासापगमे काकलीगायन इव समृद्धि- निम्नगानदः, सायन्तनसमय इव नर्तितनीलकण्ठः, कुमारमयू इव समारूढशरजन्मा, तपस्वीव प्रशमितरजःप्रसरः, तापस

इव धृतजलदकरकः, प्रलयकाल इव दर्शितानेकतरणिविभ्रमः, निरुपद्रवकाननप्रदेश इव घनोत्सेकितसारंगः, रेवतीकरपल्लव इव हलिधृतकरः, लंकेश्वर इव समेघनादः, विन्ध्य इव घनश्यामः, युवतिजन इव पीनपयोधरः समाजगाम वर्षासमयः।

विभिन्नमेघनीलोत्पलकाननीले क्रीडासरसीव, नभसि स्मरस्य कनकरत्ननौकेव, जलदकाललक्ष्मीमातंगकन्यानर्तनरज्जुरिव, नभःसौधतोरणरत्नमालिकेव, प्रवसता निदाघेन दिवः पयोधरे स्मरणाय दत्ता नखपदावलिरिव, गगनलक्ष्मीबन्धुररशनामालेव, नभोमन्दारसुन्दरकलिकेव, रतिनखमार्जनरत्नशलाकेव, रत्नमयी विलासयष्टिरिव कुसुमकेतोरिन्द्रधनुर्लताऽरराज।

अतितृष्णावेगपीतजलनिधिजलशंखमालां बलाकाच्छलादुद्वमन्निवादृश्यत जलधरनिकरः। पीतहरितैः कृष्णकेदारिकाकोष्ठिकासु समुत्पतद्भिर्दर्दुरशिशुकैर्जातुषैर्नयद्यूतैरिव चिक्रीड विद्युता समं घनकालः। रविदीपकज्वलितमेघीनिकषोपले मेघसमयस्वर्णकारकपितस्वर्णरेखेव तडिदशोभत। विरहिणां हृदयं विदारयितुं कृतं करपत्रमिव कुसुमायुधस्य केतकीपुष्पमभासत। जलददारुणि लोलतडिल्लताकरपत्रदारिते पवनवेगनिर्धूताश्चचूर्णनिकरा इव जलकणा बभुः। विच्छिन्नदिग्वधूहारमुक्तानिकरा इव, खरपवनवेगभ्रमितवनघरट्टघट्टनसंचूर्णिततारानिकरा इव, त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करका व्यराजन्त। नवशाद्वलं सेन्द्रगोपं महीमहिलाया शुकांगश्यामलं लाक्षारससाङ्कितं स्तनोत्तरीयमिवालक्ष्यत।

— वासवदत्ता

# ५—मृत्युशय्यास्थितस्य पितुः पार्श्वे हर्षः

एकदा तु (हर्षः) वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वालापुंजपिंजरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणमद्राक्षीत्। तस्मिन्नेव च दावदहने समुत्सृज्य शावकानुत्प्लुत्य चात्मानं पातयन्तीं सिंहीमपश्यत्। आसीच्चास्य चेतसि—'लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः यदाकृष्टास्तिर्यञ्चोऽप्येवमाचरन्ति' इति। प्रबुद्धस्य चास्य मुहुर्मुहुर्दक्षिणेतरमक्षि पस्पन्दे। गात्रेषु चाकस्मादेव वेपथुर्विपप्रथे। निर्निमित्तमेवान्तर्बन्धनस्थानाच्चचालेव हृदयम्। अहि च तस्मिन् शून्येनैव च चेतसा चिक्रीड मृगयाम्। आरोहति च हरितहये मध्यमह्नो, भवनमागत्योभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलवितता मतिशिशिरमलयजरसलवलुलितवपुषमिन्दुधवलोपधानधारिणीं वेत्रपट्टिकामधिशयानः साशङ्क एव तस्थौ।

अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चैलचीरकया रचितमुण्डमालकम्, श्रमातपाभ्यामारोप्यमाणकायकालिमानम्, अन्तर्गतेन शोकशिखिनाङ्गारतामिव नीयमानम्, अतित्वरागमद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानम्, अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामायान्तमद्राक्षीत्।

दृष्ट्वा च पूर्वानिमित्तपरम्पराविर्भावितभीतिरभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमाननलग्नं विषादमुपनिन्ये

पश्चाल्लेखम्। तं च देवो हर्षः स्वयमेवादायावाचयत्। लेखार्थेनैव च समं गृहीत्वा हृदयेन सन्तापमभ्यधात्—'कुरङ्गक, किं मांन्द्यं तातस्यं' इति। स चक्षुषा बाष्पजलबिन्दुभिर्मुखेन च खञ्जाक्षरैः क्षरद्भिर्युगपदाचचक्षे—'देव दाहज्वरो महान्' इति। तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल। कृताचमनश्च जनयितुरायुष्यकामोऽपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत्। अभुक्त एवोच्चचाल। 'दापय वाजिनः पर्याणम्' इति पुरःस्थितं बभाण युवानम्। वेपमानहृदयश्च ससंभ्रमप्रधावितपरिवर्धकोपनीतमारुह्य तुरङ्गममेकाक्येव प्रावर्तत अकाण्डप्रयाणसंज्ञाशंखक्षुभितं तु संभ्रमात्सज्जीभूतमुद्भूतमुखरखुररवभरितसकलभुवनविवरमागत्यागत्य सर्वाभ्यो दिग्भ्यो धावमानमश्वीयमढौकत।

अन्यस्मिन्नहनि मध्यन्दिने विगतजयशब्दम्, अस्तमिततूर्यनादमुपसंहृतगीतम्, उत्सारितोत्सवं स्कन्धावारं समाससाद। क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगादवतीर्णः राजकुलं विवेश। तत्र चातिनिःशब्दे पिहितपक्षद्वारके, परिहृतकवाटरटिते, घटितगवाक्षरक्षितमरुति, निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि, प्रविष्टकतिपयप्रणयिनि, गम्भीरज्वरारम्भभीतभिषजि, दुर्मनायमानमन्त्रिणि, भेषजसामग्रीसंपादनव्यग्रसमग्रव्यवहारिणि, मुहुर्मुहुराहूयमानतोयकर्मान्तिकानुमितघोरातुरतृषि, संचितप्रचुरप्राचीनामलकमातुलुङ्गद्राक्षादाडिमादिफले धवलगृहे स्थितम्, जिह्वाग्रे जीवितेशस्य वर्तमानम्, विरलं वाचि, चलितं

चेतसि, विह्वलं वपुषि, क्षीणमायुषि, प्रचुरं प्रलापे, सततं श्वसिते, पार्श्वोपविष्टयानवरतरोदनोच्छूननयनया गृहीतचामरिकयापि निःश्वसितैरेव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः 'आर्यपुत्र, स्वपिषि' इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत्।

अवनिपतिस्तु दूरादेव दृष्ट्वातिदयितं तनयं तदवस्थोऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ 'एह्येहि' इत्याह्वयन् शरीरार्धेन शयनादुदगात्। ससंभ्रमसुपसृतं चैनं विनयावनम्रमुन्नमय्य बलादुरसि निवेश्य विशन्निव प्रेम्णा निशाकरमण्डलमध्यम्, मज्जन्निवामृतमये महासरसि, पीडयन्नङ्गैरङ्गानि, कपोलेन कपोलमवघट्टयन्, निमीलयन्पक्ष्माग्रग्रथिताजस्रास्रविस्राविणी विलोचने विस्मृतज्वरसंज्वरः सुचिरमालिलिङ्ग। कथं कथमपि चिराद्विमुक्तमुपसृत्य कृतनमस्कारं प्रणतजननीकमुपागतमासीनं च शयनान्तिके पिबन्निव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्। पस्पर्श च पुनः पुनर्वेपथुमता पाणितलेन, क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत्—'वत्स, कृशोऽसि', इति। भण्डिस्त्वकथयत्—'देव तृतीयमहः कृताहारस्यास्याद्य' इति।

तच्छ्रुत्वा वाष्पवेगगृह्यमाणाक्षर कथं कथमप्यायतं निःश्वस्योवाच—'वत्स', जानामि त्वां पितृप्रियमतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियमतिदुर्धरो वान्धवस्नेहः सर्वप्रमाथी। अतो नार्हस्यत्मानं शुचे दातुम्। उद्दामदाह-

ज्वरदग्धोऽपि दह्ये खल्वहमधिकतरमनेनायुष्मदाधिना निशितमिव शस्त्रं तद्दणोति मां त्वदीयस्तनिमा। सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः यथा मम तथा सर्वासां प्रजानाम्। फलमस्यानेकजन्मान्तरोपार्जितस्याकलुषस्य कर्मणः करतलगतमिव कथयन्ति चतुर्णामप्यर्णवानामाधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगानुरोधः पाययति मामौषधम्। अपि च सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थमुत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञातिभिः। तदुत्तिष्ठ। कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वय्यहमपि स्वयमुपयोक्ष्ये पथ्यम्' इत्येवमभिहितस्य चास्य धक्ष्यन्निव हृदयमतितरां शोकानलः संदुधुक्षे। क्षणमात्रं च स्थित्वा पुनराहारार्थमादिश्यमानो धवलगृहादवततार। चकार च चेतसि—'अकाण्डे खल्वयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः। किमत्र करवाणि' इति।

—हर्षचरितम्

---

# ६—शूद्रकसभायां शुकः

एकदा तु नातिदूरोदिते नवनलिनदलसंपुटभिदि किंचिदुन्मुक्तपाटलिम्नि भगवति सहस्रमरीचिमालिनि राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना

कौक्षेयकेण संनिहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, अविरलचन्दनानुलेपनधवलितस्तनतटोन्मज्जदैरावतकुम्भमण्डलेव मन्दाकिनी, चूडामणिप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत् — 'देव द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुंकारनिपातिता राजलक्ष्मीर्दक्षिणपथादागता चाण्डालकन्यका पंजरस्थं शुकमादाय देवं विज्ञापयति—'सकलभुवनतलसर्वरत्नानामुदधिरिवैकभाजनं देवो विहङ्गमश्चायमाश्चर्यभूतोनिखिलभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताऽहमिच्छामि देवदर्शनसुखमनुभवितुमिति । एतदाकर्ण्य देवः प्रमाणम् ।' इत्युक्त्वा विरराम । उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि 'को दोषः, प्रवेश्यताम्' इत्यादिदेश ।

अथ प्रतीहारी नरपतिवचनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत् । प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुंजितकुलशैलमध्यगतमिव कनकशिखरिणम्, अनेकरत्नाभरणकिरणजालकान्तरितावयवमिन्द्रायुधसहस्रसंछादिताष्टदिग्भागमिव जलधरसमयदिवसम्, अवलम्बितस्थूलमुक्ताकलापस्य कनकश्रृङ्खलानियमितमणिदण्डिकाचतुष्टयस्य गगनसिन्धुफेनपटलपाण्डुरस्य नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्त-

मणिपर्यङ्किकानिषण्णम्, उद्धूयमानकनकदण्डचामरकलापम्, रुन्मयूखमुखकान्तिविजयपराभवप्रणते, शशिनीव स्फटिकादिपीठे विन्यस्तवामपादम्, इन्द्रनीलमणिकुट्टिमप्रभासंपर्कश्यामायमानैः प्रणतरिपुनिःश्वासमलिनीकृतैरिव चरणनखमयूखजालैरुपशोभमानम्, आसतोल्लसितपद्मरागकिरणपाटलीकृतेनाचिरमृदितमधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेनधवले गोरोचनालिखितहंसमिथुनसनाथपर्यन्ते चारुचामरपवनप्रनर्तितदेशे दूकूले वसानम्, अतिसुरभिचन्दनानुलेपनधवलितोरःस्थलम्, उपरिविन्यस्तकुंकुमस्थासकमन्तरान्तरानिपतितबालातपच्छेदमिव कैलासशिखरिणम्, अपरशशिशङ्कया नक्षत्रमालयेव हारलतयाकृतमुखपरिवेषम्, अतिचपलराजलक्ष्मीवन्धननिगडकटकशङ्कामुपजनयतेन्द्रनीलकेयूरयुगलेन मलयजरसगन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुशिखरम्, ईषदालम्बिकर्णोत्पलम्, उन्नतघोणम्, उत्फुल्लपुण्डरीकलोचनम्, अमलकलधौतपट्टायतमष्टमीचन्द्रशकलाकारमशेषभुवनराज्याभिषेकसलिलपूतमूर्णासनाथं ललाटदेशमुद्वहन्तम्, आमोदिमालतीकुसुमशेखरमुषसि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाचलम्, आभरणप्रभापिशङ्गिताङ्गतया लग्नहरहुताशमिव मकरध्वजम्, आसन्नवर्तिनीभिः सर्वतः सेवार्थमागताभिरिव दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, अमलमणिकुट्टिमसंक्रान्तसकलदेहप्रतिविम्बतया पतिप्रेम्णा वसुन्धरया हृदयेनेवोह्यमानम्; अशेषजनभोग्यतामुपनीतयाप्यसाधारणया राजलक्ष्म्या समालिङ्गितदेहम्, अपरिमितपरिवार-

जनमप्यद्वितीयम्, अनन्तगजतुरगसाधनमपि खड्गमात्रसहायम्, एकदेशस्थितमपि व्याप्तभुवनमण्डलम्, आसनगतमपि धनुषि निषण्णम्, उत्सादिताशेषद्विषदिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि सकलगुणाधिष्ठानम्, कुपितमपि कलत्रवल्लभम्, अविरतप्रवृत्तदानमप्यमदम्, अतिशुद्धस्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थितसकलभुवनतलं राजानमद्राक्षीत्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयदलकोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रबोधनार्थमसकृत्सभाकुट्टिममाजघान । येन सकलमेव तद्राजमेकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीद्।

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्या निर्दिश्यमानां तां वयःपरिणामपाण्डुरशिरसा रक्तराजीवेक्षणापाङ्गेनानवरतकृतव्यायामतया यौवनापगमेऽप्यशिथिलशरीरसंधिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिनानुगृहीतार्यवेषेण धवलवाससा पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुलकाकपक्षधारिणा कनकशलाकानिर्मितमप्यन्तर्गतशुकप्रभाश्यामायमानं, मरकतमयमिव पंजरमुद्वहता चाण्डालदारकेणानुगम्यमानाम्, असुरगृहीतामृतापहरणकृतकपटपटुविलासिनीवेषस्य श्यामतया भगवतो हरेरिवानुकुर्वतीम्, संचरिणीमिवेन्द्रनीलमणिपुत्रिकाम्, आगुल्फावलम्बिना नीलकंचुकेनावच्छन्नशरीरामुपरि रक्तांशुक

रचितावगुण्ठनां नीलोत्पलस्थलीमिव निपतितसंध्यातपाम्, एककर्णावसक्तदन्तपत्रप्रभाधवलितकपोलमण्डलाम् उद्यदिन्दुकिरणच्छुरितमुखीमिव विभावरीम्, आकपिलगोरोचनारचिततिलकतृतीयलोचनामीशानरचितानुरचितकिरातवेषामिव भवानीम्, उरःस्थलनिवाससंक्रान्तनारायणदेहप्रभाश्यामलितामिव श्रियम्, कुपितहरहुताशनदह्यमानमदनधूममलिनीकृतामिव रतिम्, उन्मदहलिहलापकर्षणभयप्रपलायितामिव यमुनाम्, अतिबहलपिण्डालक्तकरसरागपल्लवितपादपङ्कजाम् चिरमृदितमहिषासुररुधिरारक्तचरणामिव कात्यायनीम्, आलोहितांगुलिप्रभापाटलितनखमयूखामतिकठिनमणिकुट्टिमस्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव निधाय संचरन्तीम् आपिंजरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन रंजितशरीरतया पावकेनेव भगवता रूप एव पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहाम्, अनङ्गवारणशिरोनक्षत्रमालायमानेन रोमराजिलतालवालकेन मेखलादाम्ना परिगतजघनस्थलीम्, अतिस्थूलमुक्ताफलघटितेन शुचिना हारेण गंगास्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहाम्, शरदमिव विकसितपुण्डरीकलोचनाम्, प्रावृषमिव घनकेशजालाम्, मलयमेखलामिव चन्दनपल्लवावतंसाम्, नक्षत्रमालामिव चित्रश्रवणाभरणभूषिताम्, श्रियमिव हस्तस्थितकमलशोभाम्, मूर्छामिव मनोहारिणीम्, अरण्यभूमिमिवाक्षतरूपसंपन्नाम्, दिव्ययोषितमिवाकुलीनाम्, निद्रामिव लोचनग्राहिणीम्, अरण्यकमलिनीमिव मातंग-

कुलदूषिताम्, अमूर्तामिव स्पर्शवर्जिताम्, आलेख्यगतामिव दर्शनमात्रफलाम्, मधुमासकुसुमसमृद्धिमिव विजातिम्, अनंगकुसुमचापलेखामिव मुष्टिग्राह्यमध्याम्, यक्षाधिपतिलक्ष्मीमिवालकोद्भासिनीम्, अचिरोपरूढयौवनाम्, अतिशयरूपाकृतिमनिमेषलोचनो ददर्श।

समुपजातविस्मयस्य चाभून्मनसि महीपतेः—'अहो विधातुरस्थाने रूपनिष्पादनप्रयत्नः। तथाहि यदि नामेयमात्मरूपोपहसिताशेषरूपसंपदुत्पादिता किमर्थमपगतस्पर्शसंभोगसुखे कृतं कुले जन्म। मन्ये च मातंगजातिस्पर्शदोषभयादस्पृशतेयमुत्पादिता प्रजापतिना। अन्यथा कथमियमक्लिष्टतां लावण्यस्य। न हि करतलस्पर्शक्लेशितानामवयवानामीदृशी भवति कान्तिः। सर्वथा धिग्विधातारमसदृशसंयोगकारिणमतिमनोहराकृतिरपि क्रूरजातितया येनेयमसुरश्रीरिव सततनिन्दितसुरता रमणीयाप्युद्वेजयति।' इत्येवमादि चिन्तयन्तमेव राजानमीषदवगलितकर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम। कृतप्रणामायां च तस्यां मणिकुट्टिमोपविष्टायां स पुरुषस्तं विहंगमादाय पंजरगतमेव किंचिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च—'देव, विदितसकलशास्त्रार्थो राजनीतिकुशलप्रयोगः पुराणेतिहासकथाकलापनिपुणो वेदिता गीतश्रुतीनां काव्यनाटकाख्यायिकाख्यानकप्रभृतीनामपरिमितानां सुभाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलो वीणावेणुनिपुणश्चित्रकर्मणि प्रवीणो द्यूतव्यापारेप्रगल्भः प्रणयकलहकुपित-

कामिनीप्रसादनोपायचतुरो गजतुरगपुरुषस्त्रीलक्षणाभिज्ञः सकलभूतरत्नभूतोऽयं वैशम्पायनो नाम शुकः। सर्वरत्नानां चोदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता। तदयमात्मीयः क्रियताम्' इत्युक्त्वा नरपतेः पुरो निधाय पंजरमसावपससार।

अपसृते च तस्मिन् स विहङ्गराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्यामिमां पपाठ—

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥

—कादम्बरी

---

## ७—संध्यावर्णनम्

अनेन च समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरुष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपो दिवसस्तनिमानमभजत्। उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतचरणपाटलरागो रविरम्बर-

तलादलम्बत। आलोहितांशुजालं जलशयनगतस्य मधुभिदो विगलन्मधुधारमिव नाभिनलिनं प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत। विहाय धरणितलमुन्मुच्य कमलिनीवनानि शकुनय इव दिवसावसाने तपोवनतरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत। आलग्नरक्तातपच्छेदा मुनिभिरालम्बितालोहितवल्कला इवाश्रमतरवः क्षणमशोभन्त।

अस्तमुपगते च भगवति सहस्रदीधितावपरार्णवतलादुल्लसन्ती विद्रुमलतेव पाटला संध्या समदृश्यत। यस्यामावध्यमानध्यानमेकदेशदुह्यमानहोमधेनुदुग्धधाराध्वनितधन्यतरातिमनोहरमग्निहोत्रवेदीविकीर्यमाणहरितकुशमृषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत्। क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना संध्या मुनिभिरदृश्यत। अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीता मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत्। अपरसागराम्भसि पतिते दिनकरे पतनवेगोत्थितमम्भःसीकरनिकरमिव तारागणमम्बरमधारयत्। अचिराच्च सिद्धकन्यकाविक्षिप्तसंध्यार्चनकुसुमशबलमिव तारकितं वियदराजत। क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः संध्यारागः।

क्षयमुपागतायां संध्यायां तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत । अपहाय मुनिजन-हृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत् । क्रमेण च रविरस्तमुपागत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूल-वल्कलधवलाम्बरः सतारान्तःपुरपर्यन्तस्थिततनुतिमिरतमाल-वनलेखं सप्तर्षिमण्डलाध्युषितमरुन्धतीसंचरणपवित्रमुपहिताषा-ढमालक्ष्यमाणमूलमेकान्तस्थितचारुतारकमृगममरलोकाश्रममिव—गगनतलममृतदीधितिरध्यतिष्ठत् । चन्द्राभरणभृतस्तारकाकपाल-शकलालंकृतादम्बरतलात्त्र्यम्बकोत्तमाङ्गादिव गंगा सागराना-पूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि विकचपुण्डरीकसिते चन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्ति-स्मृतपङ्कलग्न इवादृश्यत हरिणः । तिमिरजलधरसमयापगमा-नन्तरमभिनवसितसिन्धुवारकुसुमपाण्डुरैरर्णवागतैरगाह्यन्त हंसै-रिव कुमुदसरांसि चन्द्रपादैः । विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत ।

—कादम्बरी

———

## ८—शुकनासोपदेशः

तात चन्द्रापीड विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्य-

मरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभव मित्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वम प्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा सर्वाविनयानामेकैकमप्येषामायतनं किमुत समवायः। यौवना रम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूर मात्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषा यितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्य मानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः। अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानमनुपजातपलितादिवैरूप्यमजरं वृद्धत्वमनारोपितमेदोदोषं गुरुकरणमसुवर्णविरचनमग्राम्यं कर्णाभरणमतीतज्योतिरालोको नोद्वेगकरः प्रजागरः। विशेषेण तु राज्ञाम् । विरला हि तेषामुपदेष्टारः । अहंकारदाहज्वरमूर्छान्धकारिता विह्वला हि राजप्रकृतिः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः ।

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। न ह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणपाशसंदाननिष्पन्दीकृतापि नश्यति। न परिचयं रक्षति। नाभिजनमीक्षते। न वैदग्ध्यं गणयति। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकेन न क्वचिन्निर्भरमाबध्नाति पदम्। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति पुस्तकमय्यपीन्द्रजालमाचरत्युत्कीर्णापि विप्रलभते श्रुताप्यभिसंधत्ते चिन्तितापि वंचयति।

एवंविधयाऽपि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः सर्वाविनयाधिष्ठानतां च गच्छन्ति। तेषां दाक्षिण्यं प्रक्षाल्यते, हृदयं मलिनीभवति सत्यवादितापह्रियते, गुणाश्चोत्सार्यन्ते। केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः सपद्भिः प्रलोभ्यमाना रागावेशेन बाध्यमाना विह्वलतामुपयान्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। अदूरदर्शिनः पापेनेवाध्मातमूर्तयो भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगतावल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीवकैर्द्यूतं विनोद इति, पानं विलास इति, प्रमत्तता शौर्यमिति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, स्वच्छन्दता प्रभुत्वमिति, तरलतोत्साहमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्यापहास्यतामुपयान्ति। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यो नाभिवादयन्त्यभिवादनार्हान्नाभ्युपतिष्ठन्ति गुरून् जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम्। आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय। कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति तं पार्श्वे कुर्वन्ति तं संवर्धयन्ति तं बहु मन्यन्ते तमाप्ततामापादयन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति।

तदेवंप्राये राज्यतंत्रेऽस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैर्नोपालभ्यसे सुहृद्भिर्न प्रतार्यसे विटैर्नावलुप्यसे सेवकवृकैर्न प्रलोभ्यसे वनिताभिर्नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे रागेण नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्

इदमेव च पुनःपुनरभिधीयसे। विद्वांसमपि धीरमप्यभिजातमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणै पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकः-मंगलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्, अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीप-भूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रताप-मारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति इत्येतावदभिधायोपशशाम।

—कादम्बरी

———

# ६—भूषणकवेः शिवराजेन सह समागमः

अथैकदा रजन्यां सिंहदुर्गाविदूर एव सुकोमलशाद्वलायां कलितप्रसादायां भुवि, निष्कृपकृपाणपाणि, कंचुकाच्छादित-कठिनकवचः, कलितसैनिकभटवेषः श्रीशिववीरो गुप्तवेषेण परितः पर्यटन् दुग्धधारयेव क्षालितैर्ज्योत्स्नया प्रकाशितैः पथिभिरासन्नात् शिवमन्दिरादारादाजगाम। तत्र च द्वारि रेणुरूषितरोमकुहरम्, शफोत्फालितमृत्स्नास्नातम्, त्वरितगतिश्वास-प्रश्वाससहचरितहिणत्कारसूचितक्लमम्, उत्थायोत्थाय पृष्ठमुत्कम्प्य ग्रीवाममुद्धूय पौनःपुन्येन पतित्वा भुवि विलुठन्तं कंचनाश्वमद्राक्षीत्। कस्यायं कुतोऽयमिति मनसि विचिन्वंश्च समीपमागत्य चुचुत्कारैरश्वं सान्त्वयन्तम्, हरिततृणभारं च पुरतः प्रक्षिपन्तं कमपि शूद्रयुवकमप्यवालोकयत्। तं च विवर्णवदनमाजानुधूलिधूसरितचरणयुगलं। मन्थरितशरीरं स्वेदक्लिन्नं चावलोक्य दूरतः कश्चन समायातोऽस्ति तद्भृत्य एवायमिति निश्चित्य शनैरप्राक्षीत् 'कस्यायमश्वः' इति। स तु स्वकार्यसंलग्नोऽन्यमनस्क एवं 'समायातः कोऽपि' इत्युदतरत्। पुनरपि 'कुत आगता यूयम्' इति पृच्छति शिववीरे च किमिव निरर्थं प्रश्नानुद्दङ्कयसि ? आलपितुमिच्छसि चेद् घटिकायुगलमतिवाह्य समायास्यसि, यथा पूरितजठरपिटकस्ताम्रकधूमपानैर्गलनलं कवोष्णयन्, त्वया सह वार्ताभिरध्वपरिश्रममल्पयिष्यामि।' तदाकर्ण्यान्तर्विहसन्निव शिववीरः 'तथा करिष्यावः,

किन्तु कथय तावत् कुत आगता यूयम्' इति पुनरप्यपृच्छत्। स तु घोटके दत्तदृष्टिरेव सकोपमवादीत्। 'कुत आगता यूयम्, कुत आगता यूयमिति कुतःकारैः स्फोटितौ मे कर्णौं। वयं दिल्लीत आगता दिल्लीतो दिल्लीतो दिल्लीतः। कथय किं गजं ददासि घोटकं वा?' तदाकर्ण्य शिववीरस्तत्प्रकृतिं परिज्ञाय शनैः परिवृत्य मन्दिरस्य पश्चिमदेशे पर्यटितुमारेभे।

'कोऽयं, कुतोऽयं, चरो वा, सन्देशहरो वा, कपटपथिको वा, अस्मत्पक्षपाती वा, शत्रुपदातिर्वा, कोऽप्युभयपक्षोदासीनो वेति सद्य एव विज्ञेयम्' इति विचारयन् मन्दिरपाश्चात्यप्राचीरगवाक्षादायान्तं कंचिदस्पष्टालापध्वनिमश्रोषीत्। क्षणं विरम्य च गवाक्षसमीपमागत्य ध्वनिप्रतिध्वनिभिरव्यक्तांशबहुलामप्येवमुक्तिं निश्चिच्ये यत् 'चिराय दिल्लीवल्लभपाणिपल्लवतलजच्छायामध्युषितोऽस्मि। परं न वयं कवयः कस्यापि राजत्वं वा वीरत्वं वा पक्षापित्वं वा आढ्यत्वं वाऽपेक्षामहे। न वा कस्यापि साभिमानभ्रूभङ्गमुत्तुङ्गकोपाञ्चिताऽखर्वगर्वबर्वरतां वा सहामहे। न तस्य तादृशं भूवलये राज्यं यादृशमस्माकं सारस्वतसृष्टौ। न तस्य क्रीतदासा अपि तदीहासमकालमेव बद्धकरसम्पुटा यथोचितावस्थानाः पुरतोऽवतिष्ठन्ते, यथास्माकं पदानि वाक्यानि छन्दांस्यलंकारा रीतयो गुणा रसाश्च। स दीनारसंभारैरपि न तथा परांस्तोषयितुमलं, यथा वयं केवलं वचनभङ्गीभिरेव पारयामः। अस्मद्वीररसकवितां चाकलय्य म्रियमाणोऽपि युद्धे उत्तिष्ठेत्। यस्य भाग्ये चिरावस्थायिनी

कीर्तिः समुद्रकल्लोलाघातसहं च यशः स एवास्मानाद्रियते। न वयं मीनानिव पीनान्, इभानिव तुन्दिमान्, भेकानिव निर्विवेकान्, वृषदंशकानिव कपटहिंसकान्, काकानिवास्वादित-दुर्विपाकान्, बलीमुखानिव चंचलमुखान्, शृगालानिव कलितधूर्त्ततामालान्, द्विजिह्वानिव द्विजिह्वान्, सजीवानिवोप-बर्हान्, आत्मस्तुतिमात्ररुचीन्, मूर्तिमत ईवाभिमानान्, विद्याशून्यान्, गुणिगणगुणग्रहणासमर्थान्, मिथ्यामोदरतान्, मद्यकीटान्, नृपंमन्यान्, स्वप्नेऽपि समुपास्महे। दिल्लीश्वर-पदविडम्बनमपि चाहं तादृशेष्वेवान्यतममवगत्य क्षणेनैव तत्सम्बन्धसूत्रं त्रोटयित्वा रसिकान्तरं कमपि वीरमन्विष्यन् दक्षिणां दिशं प्रस्थितोऽस्मि। पथि चामेरदेशाधीशेन बहुशः प्रार्थ्यमानोऽपि स तस्यैव दिल्लीवलयकलङ्कस्य लालाटिक इत्यवगत्य शिववीरकीर्त्तीश्च श्रात्रं श्रावं कर्णयोराकृष्ट इव इतः समायातोऽस्मि', इति वक्तारं कमपि कविं त्यक्तदिल्लीश्वरद्वार निजं दिदृक्षुमत्रागतमूरीकृत्य प्रदक्षिणच्छलेन पान्थाध्युषितप्रदेश-मागत्य तेनालपन्तं शिवमन्दिराध्यक्षं प्रणम्य बद्धाञ्जलिरागन्तु-कमपि 'कुतः श्रीमान् ? कः श्रीमान् ?' इति सादरं समपृच्छत।

शिववीरस्तु तेन सह चिरमालप्य तस्य वृत्तान्तमवस्थां प्रकृतिं चावगत्य चिराय श्रुतचरं भूषणकविरित्यभिधानं चोररीकृत्य 'श्वो द्रष्टा भवान्' 'शिवराजम्' इत्यभिधाय न्यवर्त्तिष्ट। निवर्त्तमानश्च तेनापि 'को भवान्' इति पृष्टः। एतद्देशीयः कोऽपि वीरोऽस्मि' इत्युदतीतरत्।

प्रातरेव च नित्यनियमान्निवृत्य स्वेष्टजनसहितः सभासंस्थ एव स्वभृत्येन भूषणकविमाकारयत् । स तु बद्धमहोष्णीषः पादाग्रपर्यन्तविलम्बमानकंचुको नारिकेलफलसारसहितं यज्ञोपवीतयुगलं हस्ते आदधानो द्वारपालदर्शितेन पथा सभां प्रविश्य 'विजयतां महाराजः' इति सिंहगर्जनमवधीरयता स्वरेणोच्चैरुच्चार्य स्वोपहारं महाराजहस्ते आर्पयत् ।

निर्दिष्टस्थान उपविश्य च स एवायं पूर्वदृष्टो वीर इति निरीक्ष्य 'विजयतां धर्मोद्धारणधीरो सपत्नोत्सारणसमीरो वीरो महाराजः' इत्युदीर्य च किञ्चित् स्मयमानस्य महाराजस्य मुखमवलोकयंस्तत्प्रशंसायां स्वनूतनरचितां वीररसमयीं कवितामेकामपठत् । महाराजस्तु साधुसाध्विति व्याहृत्य पुनः पठितुमाज्ञप्तवान् । पठितवति च तस्मिन् सर्वेषु प्रसन्नेषु पुनरप्यादिशत् । इत्येवं विंशतिवारं तेन सा व्रजभाषामयी कवित्वकामनामिका वृत्तिरपाठि । महाराजेन च तस्मै गजानां विंशतिर्वितीर्णेत्यद्यापि प्रसिद्धं कवितारसिकानां मण्डले तदेव च दिनमारभ्य तेन भूषणकविः स्वसभायां संस्थापितः ।

—शिवराजविजयः

—

# १०—उद्भिज्ज-परिषत्

अथ तस्य महारण्यस्य सुदूरमध्यभागे सर्वथाप्राणि-सम्बन्धरहिते कस्मिंश्चिदेकान्तकान्तारे समवेतसभ्यनिवहानिव श्रेणीबन्धावस्थितान्, एकतानचेतसा किमिवाकर्णयत इव निश्चलनिष्पंदान्, संजातपुलकानिव निश्चलोद्ध्र्वीकृतपत्रान्, क्वचित्क्वचिदनुमोदयत इवेषत्संचालितशिरोभागानवसरेषु प्रमोदमानानिव संघर्षितपल्लवकराग्रान् सर्वविधविटपिनोऽपश्याम। तेषामपि मध्यभागे व्याख्यानकृदिवेस्ततः संचालितपल्लवकराग्रः सुमहानश्वत्थो वदति—भो भो वनस्पतिकुलप्रदीपाः महापादपाः, कुसुमकोमलदन्तरुचो लताकुलललनाश्च, सावहिताः शृण्वन्तु भवन्तः। अद्य मानववार्तैवास्मत्समालोच्यविषयः। मानवा नाम सर्वासु सृष्टिधारासु निकृष्टतमा सृष्टिः। समन्तादभिनवोत्तरविलक्षण-सृष्टिमुत्पादयता भगवता जगत्सवित्रा यादृग बुद्धिप्रकर्षः सृष्टिनैपुण्यं च प्रदर्शितम्, मानवसर्गं विदधता पुनरनेन तत्सर्वमेकपद एवापहारितम्।

प्राक्तनकर्मप्रभावाज्जडत्वमापन्नानामस्माकं वार्ता तावदस्तु दूरे, जीवसृष्टिप्रवाहेषु मानवा इव परप्रतारकाः स्वार्थसाधनपरा मायाविनः कपटव्यवहारकुशलाः हिंसानिरता जीवा न विद्यन्ते। भवन्तो नित्यमेवारण्यचारिणः सिंहव्याघ्रप्रमुखान् हिंस्रस्वभावतया प्रसिद्धान् श्वापदानवलोकयन्ति प्रत्यक्षम्,

